न नियताकृतिस्तस्य देशो न नियत: प्रभो: ।
यतो हि विश्वरूपत्वे नैयत्यं प्रतिबन्धकम्[1] ।।

उपदेश्यं प्रति कीदृगेष सहजोपदेशो यच्छिवादव्यतिरिक्त: सविमर्शोऽसौ विश्वरूपो यो यमुपदेश्य: साधको जिज्ञासु:।

यस्य संविदि सर्वोऽयं भाववर्गोऽवभासते ।
प्रतिबिम्बतया सोऽपि शिव: सर्वेश्वरो भवान्[2] ।।

प्रभोर्मायाशक्त्या: क्रियन्माहात्म्यं वर्ण्यताम्, ययाऽसौ स्वातन्त्र्येण मोहित: सन्नणुत्वमङ्गीकुर्वन् जगति क्रीडमाण: पञ्चविधकृत्यकारित्वं षड्वस्तुस्वरूपतां वाऽऽत्मसात् कुरुते—

किन्तु स्वस्यैव स्वातन्त्र्यान्मायाशक्त्या विमोहित: ।
पूर्णोऽप्यणुत्वमापन्न: क्रीडतीव स्वयम्प्रभु:[3] ।।

अत: सृष्टि: स्थितिर्ध्वंसस्तिरोभावोऽप्यनुग्रह: ।
इति पञ्चसु कर्तृत्वमावहच्छिव उच्यते ।।

बिन्दुर्नादस्तथा व्योम मन्त्रो भुवनविग्रहौ ।
षड्वस्तुत्वमप्यस्य प्रोक्तं दीक्षोत्तरादिके[4] ।।

प्रभो: स्वाभाविकी अकृत्रिमा या स्फुरता, सैवोच्यते पराहंविमर्श:, अक्रम:, चैतन्यम्, परामर्श:, स्वभाव इति। क्रमरूपेव भवन्ती सैषा एकशक्ति:, त्रिशक्ति:, पञ्चशक्ति:, षड्रूप:, केवल: शिव:, केवला शक्तिर्वोच्यते —

न च बीजाङ्कुरलतादलपुष्पफलादिवत् ।
क्रमिकेयं भवेत् संविद् यतो भात्येव सर्वदा ।।

शक्ति: शिवस्वभावैव न तु वस्त्वन्तरात्मिका ।
शिवो वा कथ्यतां शक्तिर्भेदो नास्त्येव वस्तुत: ।।

स्वाभाविकी स्फुरत्ता या विमर्शाख्या पराभिधा ।
अक्रमा क्रमरूपेव सेच्छाज्ञानक्रियात्मिका ।।

त्रिशक्तिरेकशक्तिर्वा देवो वा केवल: स्थित: ।
शक्तिरेवाथ देवी सा सा च शास्त्रे निरूप्यते ।।

शिवादभिन्नमात्मानं स्वात्मनश्च शिवं तथा ।
भासयन्ती विस्फुरन्ती शक्तिश्चैतन्यमुच्यते[5] ।।

---

१. पूर्णताप्रत्यभिज्ञा, १.३८-४०
२. पूर्णताप्रत्यभिज्ञा, १.४७
३. पूर्णताप्रत्यभिज्ञा, १.४८
४. पूर्णताप्रत्यभिज्ञा, १.४८-५०
५. पूर्णताप्रत्यभिज्ञा, २.२६२, १.५, १०, ५५, ५६, ६०

स्वातन्त्र्यादसौ शिवः स्वभावेन सङ्कुचितप्रकाशो नानाविधोऽन्योन्यविलक्षणोऽणुर्भवत्यनवच्छिन्नप्रकाशः। पुनश्च स्वातन्त्र्यादेवानुपायेन, शैवापायादिना वा समवाप्तसमावेशो विश्रान्तनिजस्वरूप एष कृतकृत्यो भासते —

अनवच्छिन्नप्रकाशो यो निजानन्दपरिप्लुतः ।
स स्वातन्त्र्यात् सङ्कुचितमात्मानमवभासयन् ।।

अणुरित्युच्यते शास्त्रे स्वातन्त्र्येण पुनर्यदा ।
सर्वकर्तृत्वरूपेण सर्वज्ञत्वेन चाप्यथ ।।

प्रकाशयत्यात्मनात्मानं तदा देवः प्रकाशते ।
अनवच्छिन्नप्रकाशात्मशिवरूपतयैव सः[१] ।।

या चेयं पूर्णता, ईश्वरता, महाव्याप्तिः, स्वतन्त्रता वा; सा सिद्धैव न तूपायसाध्या, भेदापायमात्रेण तु प्रतिप्रकाशते। किं बहुना, भेदोऽपि भासमानः सन्नेव प्रतिप्रकाशते, ततश्च संविदो नातिरिच्यते, संविद्भित्तिलग्नतया प्रकाशमानत्वात् तदभिन्नत्वात्। यथाहुर्गुरवः —

सृष्टिसंहारकारित्वं पारमेश्वर्यमेव च ।
पूर्णतेश्वरता वापि महाव्याप्तिः स्वतन्त्रता ।।

न साध्या किन्तु सिद्धेयं भेदापाये तु भासते ।
भेदोऽपि भासमानीयं संविदो नातिरिच्यते ।।

संविदेव विभातत्त्वादिति निश्चयशालिनः ।
अपयाति क्षणादेव भेदोऽभेदत्वमागतः[२] ।।

शिवतत्त्वस्वरूपे मयि अभिन्नमपि विश्वं भिन्नवद् भासते, इत्येवं दृढं विविञ्चानो गुरुकृपया पारमेश्वरमनुपायसमावेशं प्राप्य कश्चन विद्वानेव कृतार्थोऽनुग्रहात्मा विजयते।

एवमेव सदा भातं यत्तत्त्वं शिवशब्दितम् ।
तदेवाहं च तत्रैव मय्यन्तः प्रतिबिम्बितम् ।।

विश्वं विमर्शशक्त्या मे भात्यभिन्नन्तु भिन्नवत् ।
एवं दृढं विविञ्चानो लभते पारमेश्वरम् ।।

शश्वदेव समावेशमुत्तमं निरुपायकम् ।
ध्वस्ताखिलमलो योगी विश्रान्तश्चिन्मयाम्बुधौ ।
महासिद्ध्या समाश्लिष्टोऽनुग्रहात्मा जयत्यसौ[३] ।।

---

१. पूर्णताप्रत्यभिज्ञा, १.६६-६८
२. पूर्णताप्रत्यभिज्ञा, १.११८-१२०
३. पूर्णताप्रत्यभिज्ञा, १.२३०-२३१,.२३६

मन्थानाभिध एष शिवो लीलया स्वस्मिन् स्वविमर्शशक्त्या सृष्टिस्थितिसंहतीर्बिभर्ति —

स्वस्मिन् बिभर्ति स्वविमर्शशक्त्या
सर्गस्थितिध्वंसमनारतं यः ।
तमच्छन्नमच्छन्नमनन्तरूपं
मन्थानसंज्ञं प्रणमामि देवम् ।।

सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः[१] ।।

चेतनाचेतनतया भासमाने ह्यस्मिन् स्वात्ममहेश्वरे भेदोऽपि स्वच्छन्दमवभासते, कथमन्यथा (भेदानवभासने) सर्वरूपताऽस्य सिद्ध्येत्। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुत्या सदान्तर्मुखस्वभावस्य स्वात्मशिवस्य न वाचा न वा क्रियया प्रसादनं सम्भवति —

मदात्मनापि त्वमुना विभासि
स्वतन्त्र एकः स्वमिवातिभिन्दन् ।
त्वय्येव भेदोऽपि न चेद् विभायात्
सर्वात्मता ते नहि साधु सिद्ध्येत् ।।

वाचा कया त्वामहमीशमीडे
प्रसादये त्वां क्रियया वा ।
यतः सदाऽन्तर्मुखभास्वरूपो
न मायिकं पश्यसि किञ्चिदेतत्[२] ।।

यत् किमपि प्रमाणमभ्युपगम्यते प्रमेयसिद्ध्यर्थम्, तस्य प्रमाणत्वं किं प्रमातारं महेश्वरं विना भवितुमर्हति? नैवार्हति किमप्युपजीवकं प्रमाणं स्वोपजीव्यं प्रमातारं कथं प्रमापयेत्? नहि यदुदराज्जायमानस्तद्विवाहे वरायाततां निर्वहति। यदाहुः —

संविन्निष्ठा हि सकलाः संवेद्यत्वात् क्रियादयः ।
संविदं नावभासेयुर्भास्यन्ते संविदा त्वमी[३] ।।

तन्त्रालोककृतोऽप्यत्र संवादः —

प्रकाशो नाम यश्चायं सर्वत्रैव प्रकाशते ।
अनपह्नवनीयत्वात् किं तस्मिन् मानकल्पनैः ।।

प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते ।
तेषामपि परो जीवः स एव परमेश्वरः[४] ।।

१. पूर्णताप्रत्यभिज्ञा, १.१९६
२. पूर्णताप्रत्यभिज्ञा, १.१९८-२०१
३. पूर्णताप्रत्यभिज्ञा, १.२२४
४. श्रीतन्त्रालोकः, १.५४-५५

अथ अविदुषां कृते समावेश उपायपक्षमपेक्षते। निर्विकल्पे पराहम्परामर्शे प्रकाशमानमनुत्तरं तत्त्वं सद्य इच्छामात्रेण येनाभेदोपायेनेच्छाख्येन स्वस्वरूपतया प्रथते, स एष शाम्भवोपायः प्रथमः। सोऽयं परामर्शस्त्रेधा विभज्यते —

शक्तिं पश्यन्नभिन्नां स्वां स्वातन्त्र्याख्यामिमां पराम् ।
निर्विकल्पं समावेशं शाम्भवं सोऽप्यवाप्नुयात् ।।

यस्य संविदि विश्वोऽयं शक्त्या स्वातन्त्र्यसंज्ञया ।
प्रतिबिम्बतया भाति सैष विश्वेश्वरो ह्यहम् ।।

उदेति मत्त एवेदं मय्येव प्रतिबिम्बते ।
मदात्मकमिदं सर्वमित्येवं शाम्भवस्त्रिधा[१] ।।

यन्नैर्मल्यं यत्र तत्प्रतिबिम्बनं तत्रैव, रूपनैर्मल्यसम्पन्ने दर्पणे रूपप्रतिबिम्बवत्। चिदात्मनि स्वात्मनि सर्वनैर्मल्यसम्पन्ने तु सर्वमेव विश्वं प्रतिबिम्बमानभासते —

नैर्मल्यं यत्र यस्यास्ति तच्च तत्रावभासते ।
सर्वनैर्मल्यसम्पन्ने चिद्रूपे सर्वमेव हि ।।

भावा भान्ति यथादर्शे निर्मलेऽपि विरोधिनः ।
अनामिश्रास्तथैतस्मिंश्चिन्नाथे विश्वसञ्चयाः[२] ।।

चितिरसौ भगवती परावाक् स्फुरत्ता, उन्मेषः, स्पन्दः, अहमिति वा व्यपदिश्यते। एनया शक्त्या परमेश्वरः शिवादिक्षित्यन्तं निखिलं जगदविकल्पसंविद्रूपतया बिभर्ति, पश्यति, भासयति च। सैषा भैरवाख्यकालप्रकाशनात् कालकर्षिणीति गीयते —

सा परा परमेशस्य शक्तिः स्वात्माविभेदिनी ।
भैरवाख्यस्य कालस्य भासनात् कालकर्षिणी[३] ।।

यथा दर्पणे नगरप्रतिभासो भेदाभेदाभ्यां बोभवीति, तथा परमेश्वरस्य तदभिन्नया यया शक्त्या विश्वरूपेण भेदेन, अभेदेन चावभासनं भवति, सा परापरेति गीयते —

यया तु भेदाभेदाभ्यां दर्पणे नगरादिवत् ।
राजते शिवशक्त्यात्मा सोच्यतेऽस्य परापरा[४] ।।

यया शक्त्या त्वस्य सर्वशक्तिमतः परस्परं विविक्ततया विश्वरूपेण इदन्तया भेदावभासनं भवति, सैषा गीयते — अपरेति। यदा तु त्रितयमप्येतत् प्रभुरसौ यया स्वशक्त्या अनुसन्धानात्मतया स्वात्मसात् कुरुते, तदा पुनरेषा परेति गीयते।

---

१. पूर्णताप्रत्यभिज्ञा, १.२६५, २७०, २७२
२. पूर्णताप्रत्यभिज्ञा, १.३५५, ३३९
३. पूर्णताप्रत्यभिज्ञा, १.३८१
४. पूर्णताप्रत्यभिज्ञा, १.३८२

एवं च परा, परापरा, अपरेति शक्तित्रयमयः परमेश्वरे दृष्टिस्मृतिविकल्पवानाभाति। परमेश्वरानुग्रहपूतः परादितत्त्वज्ञो योगी पूर्णाहन्तात्मनि शिवपदेऽभिषिच्यमानः शिवतामधिगच्छति। तत्र योऽयं नित्यः स्वच्छोऽसाङ्केतिकः पराहम्परामर्शः, तज्ज्ञः शिवयोगी शाम्भवोपायविज्जगति जयति। स एष इच्छाख्यः शाम्भवोपायः। नहीच्छाशक्तिव्यतिरेकेण क्वाप्यनुरज्यति भगवान् महेश्वरः। परमार्थः शिव एवासौ विश्वस्य प्राणभूतः। स एवाहमस्मीति सद्विकल्पोदयो बन्धहेतुभूतान् विकल्पान् विनिहन्ति। एतावान् महिमा शाम्भवोपायस्य —

एतद्धि परमाद्वैतमत्र त्यागग्रहौ नहि।
भेदस्य चाप्यभेदस्य स्थितिः सर्वत्र सर्वदा ।।

परा पराऽपराऽपरा-शक्तित्रयमयः प्रभुः ।
एक एव त्रिधा भाति दृष्टिस्मृतिविकल्पवान्[1] ।।

अतः परादितत्त्वज्ञो योगी चक्रेश्वरो भवन् ।
पूर्णाहन्तात्मनि स्पन्दतत्त्वे रूढिमवाप्नुयात् ।।

अज्ञातशक्तिः पश्वात्मा शक्तिं जानन् स्वयं प्रभुः ।
भवतीति विनिश्चित्य शक्तिं स्वां पश्य सर्वतः ।।

स्वप्नसङ्कल्पसृष्ट्यादौ शक्तिः संविदितात्मनः ।
स्वेनैवास्तीत्यतः स्वात्मा शक्त्या भाति तथा तथा[2] ।।

एषा भगवतः शक्तिर्व्यापिनीभावमापन्ना बाह्यविषयोन्मुखी सृष्टिरिति, समनाभावमापन्ना त्वसौ स्थितिरिति, उन्मनीभावमापन्ना पराङ्मुखी आत्मसात्कृतभावा सा संहारपदाभिधेया, शाम्भवे धाम्नि पूर्णविश्रान्ता त्वसौ अनाख्येति जेगीयते। यथाहुः प्रत्यभिज्ञादार्शनिकाः —

शक्तिः स्पन्दनशीलैव या बहिर्विषयोन्मुखा ।
व्यापिनीभावमापन्ना सा सृष्टिव्यपदेशभाक् ।।

सैव गाढान्तराविष्टा समनारूपतां गता ।
स्थितिः स्थिरतया भाति सृष्ट्यङ्कुरितवस्तुनः ।।

आत्मसात्कृतभावत्वात् प्रत्यावृत्य पराङ्मुखी ।
सैवोन्मनायमाना तु संहारो व्यपदिश्यते ।।

अनुपाधिर्भजमाना विश्रामं धाम्नि शाम्भवे ।
पुनराद्यैव सा शक्तिरनाख्येत्यभिधीयते[3] ।।

---

१. पूर्णताप्रत्यभिज्ञा, १.२५२, ३८५

२. पूर्णताप्रत्यभिज्ञा, १.२५२, ३८५, ३९७, ४७०, ५०९

३. पूर्णताप्रत्यभिज्ञा, १.५११-५१४

प्रभोः प्रिया एषा शक्तिः स्फुरत्ता-महासत्ता-सारम्-ज्ञातृता-कर्तृतादिपदेन गीयते। स्वसंवेदनशब्देन व्यपदिश्यमानाऽसौ संविद् भगवती विश्वव्यवस्थामूलं परमार्थवस्तु विद्यते, या विमर्शात्मतां न जहाति, स्फटिकादिवज्जडत्वापत्तेः। विमर्श एवासौ भगवान् ज्ञानशक्तिरिति क्रियाशक्तिरिति वा शब्द्यते। यथाहुः प्रत्यभिज्ञाकृतः —

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः[१] ।।

परिशील्यमानासौ स्वसंविद् भगवती स्वात्मसात्कृताशेषषडध्वरूपा परित्यक्तद्वैतावभासा अद्वयात्मतया देदीप्यतेतमाम्। सततं भासमानस्वरूपायामस्यां संविदि बीजाङ्कुरलतादिवत् क्रमिकत्वं नास्ति। स्वयमेवास्या विविधान्योन्यविलक्षणरूपेणावभासमानाया विज्ञानाय प्रत्यभिज्ञापरामर्शमात्रमेवापेक्ष्यते। तदभावादेव तु सर्वसाधकः सर्वात्मा स्वात्मशिवो नितरामन्तिकस्थोऽपि दूरातिदूरगो दुःखशतविनिपातको निराभासते —

इत्थं स्वसंवित् परिशील्यमाना
स्वात्मीकृताऽशेषषडध्ववर्गा।
द्वयावभासं परिमुच्य सद्योऽ-
द्वयावभासात्मतया चकास्ति ।।
स्वापरामर्शनं ह्येतदपराधो महान्न तु।
अन्तिकस्थोऽपि येनासौ शिवो दूरातिदूरगः[२] ।।

आस्तामेतत्, समावेशकथा प्रक्रान्ता स्मर्यताम्। असङ्कुचितचिता सह सङ्कुचितचितो यदैक्यम्, तदेव समावेश इत्युच्यते। यदाहुः —

अविकल्पा स्थितिः सेयं भावनाद्यनपेक्षिणी।
शिवतादात्म्यमापन्ना समावेशः स शाम्भवः[३] ।।

मध्यमोपायिनां शाक्तः समावेशो भवति। तत्रायं क्रम आद्रियते—अहङ्कारेण मनसा, बुद्ध्या वा यद् विकल्पं भवति, तत्र सर्वत्र अहमः स्थितिरनुस्यूता भवति। अतोऽहमहमिति नित्यविमर्शनात्मा स्वावमर्शः शाक्तः समावेश इत्युच्यते। एष च मायिकः समावेशोऽमायिकस्वरूपाकलनात्मकेन शैवोपायेन सह योजयति, तेन स्वात्मनः शिवरूपता प्रत्यभिज्ञापिता भवति साधकस्य।

---

१. ईश्वरप्रत्यभिज्ञा,
२. पूर्णताप्रत्यभिज्ञा, २.१९०, २६१,
३. पूर्णताप्रत्यभिज्ञा, २.२३१,

यद्यप्यद्वयबोधेऽभ्यासोऽनुपयोगी, तथापि द्वैतमालिन्यशङ्कानिर्मूलनायाभ्यासः समुपयुज्यते। स चैष मायिकः शाक्त उपायो ज्ञानाख्यो भेदाभेदात्मकः। यदाहुः —

अहङ्कारेण मनसा बुद्ध्या वा यद् विकल्पनम् ।
सर्वत्राहं स्थितं सर्वं मय्येवास्ति व्यवस्थितम् ।।

अथवाऽहमहमिति स्वावमर्शनमेव यत् ।
तच्छाक्तः प्रोच्यते सद्भिरुपायोऽभ्यासियोगिने ।।

विकल्पत्वाच्च भेदात्माऽभेदात्मार्थानपेक्षणात् ।
इत्युभयात्मकः शाक्त उपायोऽयं हि मायिकः[१] ।।

अत्राप्यनधिकृतानां जिज्ञासूनामुद्धारायान्तिम आणवोपायः प्रतिपाद्यते। उच्चारकरणध्यानवर्णस्थानप्रकल्पनादिनोपायेन यः समावेशः प्राप्यते, स आणवसमावेश इत्युच्यते। अत्रेदमवधेयम्—शाक्ते, आणवे चोपाये विकल्पाभ्यासः समानः, तथापि शाक्ते चेतसा स्मरणमात्रं विधीयते, आणवे तु बाह्यविषयसापेक्षं विकल्पनं भवतीत्यनयोर्भेदः। तत्र प्राणोच्चारादिकमपेक्ष्य बुद्धिजं ध्यानादिकं दूरम्, ततो दूरं देहगतं करणादि, ततोऽपि विदूरं बाह्य मण्डलस्थण्डिलादिकम्—इत्येष क्रमः शास्त्रेषु प्रतिपादितः। तत्र योऽसौ चिद्रूपोन्मेषः, तत् सामीप्यमित्युच्यते; यस्तु चिद्रूपनिमेषस्तत्किल दूरत्वमित्युच्यते। यथाहुः —

मितमातृत्वगौणाय परमातृत्वक्लृप्तये ।
प्रत्यभिज्ञाफलोपाय उपादेयो यथायथम् ।।

अणुस्वातन्त्र्यजन्मापि विकल्पो निश्चयात्मताम् ।
सम्यक् संस्कारतो गच्छन् भोगमोक्षौ प्रयच्छति[२] ।।

प्रत्यभिज्ञानये पारमेश्वरी शक्तिरेव कार्यकारणभावमपि भावयति। यश्च कल्पिताकल्पितभेदेन द्वैविध्यं भजते। अकल्पित एव तु कल्पितस्यापि प्राणभूतः। सच्चिद्घनानन्दरूपस्य ईशस्यैव सर्वकर्तृत्वं सम्भवति, न तु जडस्य। अत एव तिङर्थकृतिवादिनो नैयायिका अपि "रथो गच्छति" इत्यादौ लक्षणया व्यापारमेव तिङर्थमभिदधति। शक्तिमानसावेव अन्तरात्मतया बहिरात्मतया वाऽवभासते। एवं च शक्तिरूपं शिवरूपं वा शिवादिक्षितिपर्यन्तं सर्वं तत्त्वं चकास्ति, एतदुभयरूपं वा द्वैतवर्जितम्। चकास्ति किल स्वातन्त्र्यशक्तेरद्भुतो महिमा यद् अनया प्रभुरेवं कल्पिताकारं विधाय कल्पितकर्मभिरात्मानं प्रतिबध्नाति, फलतश्चायमणुः सम्पद्यते। पुनश्चाणुरयं पूर्णतां प्रत्यभिजानानः शुद्धमिव रूपं सम्प्राप्य मुच्यते। तेन तेन रूपेण बहुधा भासमानता त्वस्य स्वभावः, वह्नेर्दाहिकेव। तेन नात्र कश्चनानुयोगवार्ता समुदेतुमर्हति।

---

१. पूर्णताप्रत्यभिज्ञा, २.२३८-२४०।    २. पूर्णताप्रत्यभिज्ञा, २.२५०-२५४

शिवगुरोरनुकम्पया कस्यचिदेव शिवे या नवधा भक्तिस्तया शक्तिपातसंज्ञया पूर्णता परिचीयते, येनासौ परशक्तिपातसम्पन्नोऽपरिच्छिन्नसंविद्रूपः सन् चकास्ति, कृतकृत्यतां चाश्नुते। भोगांशसंस्कारसमाश्लेषयुतेनापरशक्तिपातेन तु न जीवन्मुक्तिः, अपि तु मरणोत्तरं प्राप्यमाणा देहपातसमकालिकी मुक्तिरेवाऽपरा समवाप्यते। यथाहुर्गुरवः —

पारमार्थिक एवायं कल्पितोऽप्यस्ति वस्तुतः ।
परमार्थादृते सत्ता घटते कल्पितस्य न ।।

अस्वतन्त्रस्य कर्तृत्वं जडस्य नोपपद्यते ।
स्वीकृता लक्षणा तस्मात् तिङर्थकृतिवादिना ।।

शक्तिश्च शक्तिमांश्चापि द्वे तत्त्वे समवस्थिते ।
शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांश्च महेश्वर ।।

अणुरूपोऽप्ययं पूर्णं शुद्धं रूपं स्पृशत्यहो ।
परावृत्त्येति महिमा स्वातन्त्र्यस्यास्य दृश्यताम् ।।

प्रकाशात्मा स्वतन्त्रोऽयं चिद्रूपो नर्तकः शिवः ।
स्वभावात् स्वस्वरूपस्य प्रच्छादनपरायणः ।।

परमः शक्तिपातोऽसौ परिपूर्णचिदात्मता ।
ध्वस्तोपाध्यनवच्छिन्नसंविदेकस्वभावता ।।

भोगांशेन समाश्लिष्टः प्रकाशः परमः स यः ।
अपरः शक्तिपातः स पर्यन्ते शिवताप्रदः[१] ।।

अनादिमलमेव पशुत्वाधायकम्, तच्चेदं स्वेच्छया उदेति, उल्लसति विनश्यति च। यथाहुरभिनवगुरवः—

अतः स्वरूपस्वातन्त्र्यमात्रं मलविजृम्भणम्[२] ।।

अनुपायेन सोपायेन वा जिज्ञासुरणुः श्रीगुरुकृपया समावेशलक्षणं संसारार्णवतारकं ज्ञानमधिगच्छति, यल्लब्ध्वा देहस्थोऽपि सकलो जीवन्मुक्तः शिवशक्तिसामरस्यमवाप्य निर्धूतपशुभावो विदीर्णपाशजालः पतिश्चकास्ति ज्ञानित्वदिशा ऐश्वर्यमुपगतः शिवयोगी।

तदेवं लोके शास्त्रे च योऽयं परमोपादेयः सर्वशक्तिमान् शिवः स्वात्ममहेश्वरः, स एव सर्वतत्त्वप्राणभूतः एक एव परमो गुरुः। सततभवभासमानोऽप्ययं नितरां गुप्तः सर्वप्रमाणागोचरः सदैवाभिनवो राराजते। यदुक्तम् —

---

१. पूर्णताप्रत्यभिज्ञा, ४४२, ४५७, ४५८ २. पूर्णताप्रत्यभिज्ञा, २.४७२,

"स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" इति ।

सर्वस्य तत्त्वस्य च तत्त्वभूतो
गुरुः स एको नहि कश्चिदन्यः ।
विभासमानोऽपि न भास्यते यो
गुप्तो गुरुः सोऽभिनवः सदास्ते[१] ।।

त एवोपासकाः शिवतत्त्वं प्रपश्यन्ति, ये तावदात्मतत्त्वं साधु प्रपद्यन्ते। यथा च प्रभा भास्वतो न भिद्यते, शर्करा वा माधुर्यान्न भिद्यतेः तथैव शक्तिरपि शक्तिमतो न भिद्यते, गुरोर्वा शिष्यः। सर्वलक्षणलक्षितः सद्गुरुः स्वात्ममहेश्वरः परापरमयो ज्ञानक्रियायुतो ह्यानन्दमयः सदा जयति शिवस्यानुग्रहमूर्तिः। यथाहुः —

स ह्यखण्डितसद्भावं शिवतत्त्वं प्रपश्यति ।
यो ह्यखण्डितसद्भावमात्मतत्त्वं प्रपद्यते[२] ।।

गुरुशिष्यस्वरूपेण दृश्यते यद्यपि द्विधा ।
तथापि गुरुरेवैकः सर्वलक्षणलक्षितः[३] ।।

यत्संविच्छविभिन्नभेदतिमिरा एतादृशाः स्मो वयं ।
तं नित्यं स्वगुरुं परापरमयं ह्यानन्दरूपं नुमः[४] ।।

अन्ते परमगुरुमभिनवमेव शरणीकरवाणि —

केतकीकुसुमसौरभे भृशं भृङ्ग एव रसिको न मक्षिका ।
भैरवीयपरमाद्वयार्चने कोऽपि रज्यति महेशनोदितः[५] ।।



१. पूर्णताप्रत्यभिज्ञा, २.५९६
२. श्रीतन्त्रालोकः, ४.२७५
३. पूर्णताप्रत्यभिज्ञा, २.५९८
४. पूर्णताप्रत्यभिज्ञा, २.६२२
५. श्रीतन्त्रालोकः, ४.२७६

# पराहन्तामधिकृत्य वीरशैवप्रत्यभिज्ञादर्शनयो-स्तुलनात्मकं समीक्षणम्

– पण्डितमहेशझा –

श्रीभारते वर्षे आगमस्य सर्वतो बलवत्तरं प्रामाण्यं चिराद् दृश्यते। वैदिकीषु संहितासु दर्शनशास्त्रसम्बद्धानि तत्त्वानि विकीर्णानि सन्ति। उपनिषत्सु तु दर्शनस्य पर्याप्तमुपबृंहणं सञ्जातम्। श्वेताश्वतरोपनिषदि शिवरुद्रयोः स्वरूपं दार्शनिकदृष्ट्या विवेचितं विद्यते। शुक्लयजुर्वेदमाध्यन्दिनसंहितायां रुद्रमुद्दिश्याष्टावध्याया राजन्ते । एवं च वेदे शिवदर्शनरहस्यं पर्याप्तं वर्णितं विद्यते। तन्त्रेऽपि शिवभाषितं दार्शनिकं रहस्यं पर्याप्तमुपबृंहितं विद्यते। वेदस्तन्त्रं चेति द्वयमागमशब्देनाभिधीयते। यथाहुर्वाचस्पतिमिश्रमहानुभावाः — "आगच्छन्ति बुद्धिमारोहन्ति यस्माद् अभ्युदयनिःश्रेयसोपायाः स आगमः" इति।[१] तन्त्रपरकोऽप्ययमागमशब्दो भवति। यथोक्तम् —

आगतं शिववक्त्रात्तु गतं च गिरिजामुखे ।
मतं श्रीवासुदेवेन आगमस्तेन कीर्तितः ।। इति।

वेदाः परमेश्वरस्य निःश्वासभूताः स्वत एव आविर्भवन्ति। आगमानां तु आद्य उपदेष्टा स्वयं भगवान् शिवः भगवतीं पार्वतीमागमरहस्यं श्रावयामास। गुरवः शिष्यान् अनुशिंषन्ति येनासौ आगमः शास्त्रम्। न चैतावता आगमानां वेदविरुद्धत्वं कुतश्चिदपि सम्भाव्यते।

निगमागमयोर्मुख्यतया दर्शनसिद्धान्ता एव परमपुरुषार्थोपायविवेचनपरा अवलोक्यते। तत्र प्रतिपादितानि दर्शनानि द्विधा विभाज्यन्ते। तत्र आस्तिक-नास्तिक-दर्शनानां यानि लक्षणानि बहुभिराचार्यैर्भिन्नभिन्नानि प्रतिपादितानि, तेषां पर्यालोचनेन निष्कर्षोऽयं यद् वेदप्रामाण्यमङ्गीकुर्वाणानि न्यावैशेषिक-सांख्ययोग-पूर्वोत्तरमीमांसाख्यानि वैदिकदर्शनान्यास्तिकानि भवन्ति। चार्वाकजैनबौद्धाख्यान्यवैदिकानि वेदप्रामाण्यानभ्युपगन्तत्वान्नास्तिकानि दर्शनानि भवन्ति।

तानीमानि द्वैत-द्वैताद्वैत-अद्वैत-भेदेन त्रिधा राजन्ते। तन्त्रप्रोक्तानि दर्शनान्यपि त्रिधा भिद्यन्ते—वैदिकं बौद्धं जैनं चेति। उपास्यदेवताभेदभिन्नानि वैदिकदर्शनान्यास्तिकानि त्रिधा श्रूयन्ते—शैवम्, वैष्णवम्, शाक्तं चेति। शेषदर्शनद्वयं तु नास्तिकम्। आस्तिकागमेष्वपि

१. योगसूत्र-तत्त्ववैशारदी, १.२५

शैवागमः प्रधानम्। तस्य पञ्च प्रस्थानानि भवन्ति। तत्र पाशुपतं सिद्धान्तशैवं च द्वैतवादिदर्शनम्। प्रत्यभिज्ञादर्शनमद्वैतवादिदर्शनं विद्यते। लकुलीशपाशुपतं द्वैताद्वैतवादिदर्शनं विद्यते। श्रीकण्ठशैवदर्शनं विशिष्टाद्वैतवादी विद्यते। वीरशैवदर्शनं तु शक्तिविशिष्टाद्वैतवादी विद्यते।

सिद्धान्तशब्दः पङ्कजादिशब्दवद् अष्टाविंशतिसंख्याकानां शैवागमानां बोधको रूढः। तत्र वैदिकवाक्ये शिवरुद्रयोः रूपद्वययोः प्रतिपादनं विहितम्। तयोः शिवरुद्रयोरविरोधो वीरशब्देन प्रतिपाद्यते। यदुक्तम् —

विरोधार्थो विशब्दः स्याद् रशब्दो रहितार्थकः ।
विरोधरहितं शैवं वीरशैवं विदुर्बुधाः ।।

अष्टाविंशत्यागमेषु समुपस्थितानां द्वैताद्वैतादिविरोधानां समन्वयार्थं किल भगवान् रेणुकाचार्यो रेणुकगीतामुपदिदेश। तत्रोपदेष्टा रेणुकाचार्यः, श्रोता चागस्त्यमुनिरिति सम्प्रदायः। विनेयजनस्योपकारवाञ्छया शिवयोगिशिवाचार्यो रेणुकागस्त्यसंवादाख्यं ग्रन्थमाश्रित्य शिवागमान् पर्यालोड्य शक्तिविशिष्टाद्वैतप्रतिपादकं सिद्धान्तशिखामणिग्रन्थं विरचयामास। यदुक्तम् —

रेणुकागस्त्यसंवादं निगमागमविश्रुतम् ।
प्रदीपयति गुप्तार्थमुद्धृत्य शिवयोगिराट् ।।

तथा च वीरशैवदर्शनस्येदं वैशिष्ट्यं यदत्र द्वैताद्वैतश्रुतीनां समन्वयसिद्धान्तप्रतिपादनं विधीयते। यदुक्तं श्रीपतिपण्डिताराध्येन —

श्रुत्येकदेशप्रामाण्यं द्वैताद्वैतमतादिषु ।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ।। इति।

श्रीरेणुकभगवत्पादा अप्याहुः —

अगस्त्य! बहुधा ख्याताः सिद्धान्ता रुचिभेदतः ।
भिन्नाचारसमायुक्ता भिन्नार्थप्रतिपादकाः ।।

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
एतानि मानभूतानि न हन्तव्यानि युक्तिभिः ।।

सद्गुरुशिवाचार्येण शक्तिपातविधिना दुःखसर्वस्वं जीवत्वमपसारयितुं यां पराहन्तां प्रकाश्य शिवसामरस्यात्मिका मुक्तिः शिष्येषु आधीयते, तामिमां पराहन्तामधिकृत्य वीरशैवप्रत्यभिज्ञादर्शनयोः काचन तुलना प्रस्तूयते।

वीरशैवदर्शने परमतत्त्वं परशिवपदेनोच्यते। सोऽयं परशिवः सगुणः; सकलपदवाच्यः निर्गुणो निष्कलपदवाच्यश्चेत्युभयरूपेण स्वीक्रियते। यथाहुः —

सृष्टेः पूर्वं महादेवः शक्तिसङ्कोचहेतुना ।
निर्गुणत्वेन शास्त्रेषु गीयते तत्त्ववेदिभिः ।।

सृष्ट्यादौ परमेशस्य शक्तेः प्राचुर्यवैभवात् ।
सर्वज्ञत्वादिकल्याणगुणवानिति कीर्त्यते[१] ।।

विमर्शवादिनो वीरशैवदार्शनिकाः "अशब्दमस्पर्शं"[२], "अस्थूलमनणु"[३] इत्यादिनिर्गुणश्रुतीनां सृष्ट्युन्मुखपरमेश्वरशक्तिसङ्कोचपरत्वमुपवर्णयन्ति।

"स ईक्षाञ्चक्रे"[४], "तदैक्षत बहु स्यां प्रजायेय"[५] इत्यादिसगुणश्रुतीनां च सृष्ट्युन्मुख-परमेश्वरशक्तिविकासपरत्वमास्थीयते। एवं च जगदुत्तीर्णे जगद्रूपे वा महेश्वरे विमर्शात्मता न जातु हीयते। यथाहुः श्रीरेणुकभगवत्पादाः —

परिच्छेदकथाशून्यं प्रपञ्चातीतवैभवम् ।
प्रत्यक्षादिप्रमाणानामगोचरपदे स्थितम् ।।

स्वप्रकाशं पराकाशमनौपम्यमनामयम् ।
सर्वज्ञं सर्वगं शान्तं सर्वशक्तिनिरङ्कुशम्[६] ।। इति।

स चायं विमर्शः प्रभोः शक्तिरित्याख्यायते। एनया शक्त्या विशिष्टः शिव एवं जगतो निमित्तोपादानकारणभूतः स्वे महिम्नि प्रतिष्ठितो विद्यते। सा चेयं शक्तिर्गुणत्रयात्मिका सृष्ट्युन्मुखा भवति, सच्चिदानन्दलक्षणा तु प्रभोरवियोज्या स्वरूपोन्मुखा भवति। यदाहुः —

तदीया परमा शक्तिः सच्चिदानन्दलक्षणा ।
समस्तलोकनिर्माणसमवायस्वरूपिणी[७] ।। इति।

गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी ।
तद्वैषम्यात्समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा[८] ।। इति।

असाधारणशक्तिविशिष्टं जगत् तादृशशक्तिविशिष्ट एव कश्चिद् निर्मातुं शक्नोति। दृश्यतां परशिवस्याद्भुतशक्तिविशिष्टस्य जगति विलक्षणां शक्तिम् — हुताशे उष्णताम्,

---

१. सू० श्रीकर० १.३.७१
२. कठ० २.३
३. बृ० उ० ३.८.८
४. प्रश्नो० ६.३
५. छा० उ० ६.२.३
६. सि० शि० २.४-५
७. सि० शि० २.१२
८. सि० शि० ५.३९

इन्दौ शैत्यम्, अश्मनि काठिन्यं च। तदिदं सर्वं माहात्म्यं प्रभौ शिवे स्वातन्त्र्याख्यशक्तेः। यदुक्तम् —

औष्ण्यं हुताश इव शीतलिमानमिन्दौ
शय्यासु मार्दवमिवाश्मसु कर्कशत्वम् ।
बालेषु मोह इव योगिषु च प्रबोधः
स्वातन्त्र्यमस्ति हि नियन्त्रयितुर्महन्मे ।।

सिद्धान्तशिखामणिसमीक्षायां शक्तिसद्भावे लोकानुभवः श्रुतिश्च प्रमाणत्वेन वर्तत इति प्रतिपादितम्। तथा हि—लोके अग्निः कदाचिद् दह्यमानोऽनुभूयते, कदाचित् तु मणिमन्त्रादिना सति प्रतिबन्धेऽदह्यमान एवानुभूयते। एवं चाग्निस्वरूपातिरिक्ता दहनशक्तिः काचन विद्यत इत्यनुभूयते। सैषा शक्तिः शक्तिमतो न भिद्यते, न चात्यन्तं न भिद्यते। अतो भेदाभेदपक्षमङ्गीकुर्वन्ति वीरशैवाः। एवं च प्रत्यक्षमेव जगति तेषु वस्तुषु भिन्न-भिन्ना शक्तिः प्रतीयते। भगवती श्रुतिरपि प्रभोः शक्तिसद्भावे मौनं नावलम्बते—"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्वेताश्वतरोपनिषदि[1] "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति च तत्रैव।[2] स्मृतिरपि भगवती प्राह वीरशैवानन्दचन्द्रिकोद्धृता[3]—"न शिवेन विना शक्तिर्न शक्तिरहितः शिवः" इति।

वीरशैवागमे शक्तिशक्तिमतोरविनाभावाख्यः सम्बन्धोऽङ्गीक्रियते। यथाहुः —

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी ।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा[4] ।।

अयमाशयः—यथा चन्द्रचन्द्रिकयोः परस्परं नात्यन्तं भेदो न वाऽभेदस्तथैव स्वरूपोन्मुखस्य शिवस्य शक्तिर्विमर्शनाम्नी अक्षुब्धा पराहन्ता तदभिन्ना विद्यते, विश्वोन्मुखस्य तु क्षुब्धा विश्वाकारेत्यवस्थाभेदेन भेदाभेदात्मकोऽविनाभावसम्बन्धः शक्तिशक्तिमतः प्रसिद्ध्यति। यथाहुः पौराणिकाः —

एषा शक्तिः शिवा ह्येतत् शक्तिमानुच्यते शिवः ।
शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ।।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः[5] ।।

---

१. शि० शि०, ६.८ २. तत्रैव ४.१०
३. तत्रैव, पृ. ७ ४. सि० शि०, २०.४
५. कूर्मपुराणम् ।

एनामेव शक्तिमवष्टभ्य प्रभुः परशिवो जगतो निमित्तोपादानकारणं विद्यते। मृत्कुम्भदृष्टान्तेन पराहम्परामर्शशक्तिमादाय प्रभुरुपादानकारणम्, कुलालघटदृष्टान्तेन शक्तिमत्प्राधान्येन प्रभुः निमित्तकारणं च विद्यत इति परशिवे जगतो निमित्तोपादानकारणत्वमुपपद्यते, "विश्वाधिको रुद्रो महर्षिः", "सर्वो वै रुद्रः" इत्यादिश्रुतेः। स्मृतिरपि भवति —

यस्मादेतत् समुत्पन्नं महादेवाच्चराचरम्।
तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः।।

तथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः।
तथा शिवात् समुत्पन्नं शिव एव चराचरम्[१] ।। इति।

अनयोक्त्या प्रभोः शक्तिप्राधान्येन जगदुपादानत्वं प्रसाध्यते —

जगत् सिसृक्षुः प्रथमं ब्रह्माणं सर्वदेहिनाम्।
कर्तारं सर्वलोकानां विदधे विश्वनायकः[२] ।।

अनया चोक्त्या तु प्रभुर्जगतो निमित्तकारणमिति प्रतिपादितं भवति। एवं च भिन्ननिमित्तोपादानकारणत्वं शिवस्य प्रतिपादितं भवति। यथाह भगवती श्रुतिः—"यथोर्णनाभिः सृजते गृह्णते च"[३] इति।

यानि षट्त्रिंशत्तत्त्वान्यागमेषु स्वीक्रियन्ते, तानि सर्वाणि शक्तेरेव परिणामभूतानि, शक्तिश्च भगवती शक्तिमतो न व्यतिरिच्यते। यथोक्तम् —

शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।
शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांश्च महेश्वरः ।। इति।

यदा जिज्ञासुः साधकः शिवगुरुमुपसर्पति, तदा विश्वविलयनक्रमसमादरो भवति। तद्यथा — पार्थिवं पृथिव्याम्, पृथिवी जले, जलं वह्नौ, वह्निर्वायौ, वायुराकाशे, आकाशमात्मशक्तौ विलीयते। एवं चाहमात्मनोऽनुत्तरशिवस्य या पराहन्तात्मिका शक्तिर्भगवती, तत्रेदन्तात्मकस्य पृथिव्यादेराकाशान्तस्य समस्तस्य विश्वप्रपञ्चस्य विलापनादाहुतीकरणाद् साधकोऽसौ विश्वहोमीति प्रोच्यते। यथोक्तम् —

पराहन्तामये स्वात्मपावके विश्वभास्वति।
इदन्ताहव्यहोमेन विश्वहोमीति कथ्यते[४] ।।

---

१. सि० शि०, १०.२
२. सि० शि०, २.१४
३. छा० उ० ३.१४.१
४. सि० शि०, १४.३८

आगमिनामेषा मर्यादा यदत्र स्वात्मनि, शिवगुरौ, प्रभौ चाभेदबुद्धिर्जायते। तदैव जीवन्मुक्तिरभिव्यज्यते। एषाऽभेदबुद्धिरेव पूर्णाहन्तेति वा पराहन्तेति वाऽभिधीयते। यदाहुः शिवगुरुवः —

अहं शिवो गुरुश्चाहमहं विश्वं चराचरम् ।
यया विज्ञायते सम्यक् पूर्णाहन्तेति सा स्मृता[१] ।।

यश्चायं विश्वहोमी, या वा पूर्णाहन्ता सोऽसौ ज्ञानयज्वेति प्रोच्यते। यतो ह्यसौ चिद्रूपे प्रलयाग्नौ भेदमयं जगत् प्रविलापयति। असावेवोच्यते विश्वहव्यभुगिति। तदुक्तम् —

आधारवह्नौ चिद्रूपे भेदजातं जगद्धविः ।
जुहोति ज्ञानयज्वा यः स ज्ञेयो विश्वहव्यभुक्[२] ।।

एषा पराहन्तैव परा विद्येति बुधैरुच्यते। यत्र चिदात्मनि विश्व लीनं भवति, शिवशक्तिसामरस्योदयेन तत्र स्वात्मापि विलीनतां याति। जगन्मोहस्ततो निवृत्तो भवति। एषैव मुक्तिपदेनाप्यभिधीयते। तदुक्तम् —

निरस्तविश्वसम्बाधे निष्कलङ्के चिदम्बरे ।
भावयेल्लीनमात्मानं सामरस्यस्वभावतः ।।

सैषा विद्या परा ज्ञेया सत्तानन्दप्रकाशिनी ।
मुक्तिरित्युच्यते सद्भिर्जगन्मोहनिवर्तिनी ।।

पराहन्तोदये सति जीवः शिवेन सहैक्यमवाप्नोति। तदुक्तम् —

भक्तादिधामार्पितधर्मयोगात् प्राप्तैकभावः परमाद्भुतेन ।
शिवेन चिद्व्योममयेन साक्षान्मोक्षश्रियो भाजनतामुपैति[४] ।।

पराहन्ता भगवती स्फुरत्ता परा विमर्शरूपा, अक्रमा इच्छाज्ञानक्रियाभिधा वा शक्तिरित्युच्यते। तदुक्तम् —

स्वाभाविकी स्फुरत्ता या विमर्शाख्या पराभिधा ।
अक्रमा क्रमरूपेव सेच्छाज्ञानक्रियात्मिका[५] ।।

---

१. सि० शि० १४.३९
२. सि० शि० १४.४०
३. सि० शि० १४.४२-४३
४. सि० शि० १४.४४
५. पूर्णताप्रत्यभिज्ञा, १.५५

जगति सुमेरुर्भवेत् परमाणुर्वा भवेत्, पराहन्तया विहीनो देवो न भवति। देवरहिता देवी वा न भवति। एकाप्यसौ शक्तिरनेकाभिधाना भिन्न-भिन्नपदसंवेद्या भवति। तदुक्तम् — "त्रिशक्तिरेकशक्तिर्वा देवो वा केवलः स्थितः"[१] इति।

शिवस्वरूपमामर्शयन्ती अहमात्मिका शक्तिः स्वस्यां शिवं प्रकाशयन्ती स्वयमसौ शिवे भासमाना भवति। एषा भगवती स्वात्मानं शिवादभिन्नं भासयति, शिवमपि स्वाभिन्नं प्रकाशयतीति चैतन्यपदेनाभिधीयमाना भवति। तदुक्तम् —

अहमित्यात्मिका शक्तिः शिवामर्शस्वरूपिणी ।
भासयन्ती शिवं स्वस्यां भातीयं च शिवे स्वयम् ।।

शिवादभिन्नमात्मानं स्वात्मनश्च शिवं तथा ।
भासयन्ती विस्फुरन्ती शक्तिश्चैतन्यमुच्यते[२] ।।

प्रकाशाख्यशिवस्याहम्परामर्शः प्राणभूत आस्ते। नासौ प्राणादिदेहपर्यन्तं स्पृशति, विशुद्धसंविद्रूपत्वात्। अस्येमानि संज्ञान्तराणि शास्त्रेषु प्रथन्ते—स्वभावः, सारः, घूर्णिः, महाव्याप्तिः, पूर्णता, ईश्वरता, पारमैश्वर्यम्, हृदयम्, विभूतिः, ऊर्मिः, काली, वाणीति च। स्वरूपसंवित्त्यात्मिकेयमेव विद्येति प्रोच्यते, स्वरूपगोपनात्मिका तु जगद्विलासिनी मायेति प्रोच्यते। अनुत्तरः शिव एव नित्यस्पन्दमयः सामरस्येन अहमित्येवं समुल्लसन् शाक्तीं दशामधिगच्छति, अतोऽव्यतिरिक्ता खलु शिवादसौ।

शब्दार्थोभयगर्भिणी महामन्त्रमयी असौ पराहन्ता भगवती अनुत्तरस्वरूपमेवास्ते। शुद्धचैतन्यभासिका ह्यसौ "पराहन्ता" इति शब्द्यते, इदमंशतामवभासयन्ती तु मायेति व्यपदिश्यते।

असावेव सृष्टिं मुक्तिं चावकल्पते, मोहं विवेकं च बिभर्ति, सुखप्रदा असुखं व्यवच्छिनन्ति। अनयैव स्पृष्टः शवो याति शिवताम् अत्र भवन्तीमेव शर्वः सर्वार्थविधानशक्तिं याचते। यो हि जनोऽस्या ललितं पादपङ्कजमाकलयति, स लौकिकमलौकिकं च वैभवमाप्नोति। विश्वाराध्यासौ स्वात्मसंवित्तिर्ज्ञानपूर्वकमाराधिता विश्वसिद्धिं यच्छति। अविज्ञाता त्वसौ बन्धदात्री, स्वभावत्वेन विज्ञाता तु भोगमोक्षौ प्रयच्छति। तदुक्तम् —

अविज्ञाता त्वियं शक्तिर्बन्धिकैव पशोः सदा ।
स्वभावत्वेन विज्ञाता भोगमोक्षोभयप्रदा[३] ।। इति।

इयमेव भगवतः शिवस्याभिन्ना इच्छात्मिका शक्तिः, नैनां परित्यज्यान्यां काञ्चिदुपैति भगवान् शिवः —

१. पूर्णताप्रत्यभिज्ञा, १.५६
२. पूर्णताप्रत्यभिज्ञा, १.५९-६०
३. पूर्णताप्रत्यभिज्ञा, १.३९५

इच्छाशक्तिं महेशानीं सर्वसम्पत्प्रदायिनीम् ।
अनुरक्तां सतीं हित्वा नोपैत्यन्यां महेश्वरः[१] ।।

स्वात्ममहेश्वरे या रतिः = गाढानुरागः, सैव पूर्णता पराहन्ता वा। सा च स्वस्मृतेर्नान्या। स्मृतौ च समेषां स्वातन्त्र्यमिति स्वप्रत्यभिज्ञैव सर्वकृच्छ्रापनोदिनी भगवती पराहन्तेति तामेव शरणं व्रजानि।

स्वस्मिन् रतिः सर्वगुणाय कल्पते
सा चापि स्वस्य स्मृतिरेव केवलम् ।
स्मृतौ स्वतन्त्रोऽस्ति समस्तलोक-
स्तथापि दुःखीति महद् विचित्रम्[२] ।।



१. पूर्णताप्रत्यभिज्ञा, १.४०५

२. पूर्णताप्रत्यभिज्ञा, १.४.२

# SIDDHĀNTA ŚIKHĀMAṆI AND ANUBHAVASŪTRA

**Dr. N. V. Koppal**

The Vīrsaiva faith, like the other faiths has instructed certain tenets to its followers. Of these,[1] some tenets represent its philosophical aspects and systematic practice like-the ṣaṭsthala, the spiritual path. This plan of practice based on the Śivāgamas has devised to achieve beautification, the final goal of life.[1a] Traditionally it is believed that the principles of Viraśaivism have been incorporated in the latter part of the *Kāmika* and other Āgamas[2] among which the outlines of 101 sthala even are found and the same were instructed to the sage Agastya by the illustrious Reṇukācārya[3]. So an attempt was made to divide the main six sthalas into 101 sthalas called Ekottaraśatasthala and brought forth systematically in some Sanskrit works like *Siddhānta Sikhāmaṇi* etc[4]. Besides, Vīraśaiva mystic poet Sri Moggeya Māyideva in 1430 has incorporated in his work *Śivānubhavasūtra*, the principles of 101 Ṣaṭsthala in the poetic form and presented the Ṣaṭasthala principles in a lucid manner. But this *Śivānubhavasūtra* indeed has been written on the basis of Angasthala only. In his view sthala is as under :

एकमेव परं ब्रह्म सच्चिदानन्दलक्षणम् ।
शिवतत्त्वं शिवाचार्याः स्थलमित्याहुरादरात् ।।

सर्वेषां स्थलभूतत्वाल्लयभूतत्वतस्ततः ।
तत्त्वानां महदादीनां स्थलमित्यभिधीयते ।।

यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः ।
लीयते पुनरन्ते च स्थलं तत्प्रोच्यते ततः ।।[5]

Sthala is described as the Supreme divine principle (परशिवतत्त्व) or Parabrahman and which is the source and support of all phenomenal existence with movable and immovable objects and the goal of all evolution.[6] The word 'Stha' denotes the source through which the phenomenal world emerges and have its sustenance. The word 'la' suggests the goal in which the individual soul finally merges itself. For the aspirant, 'Sthala' indeed is the ultimate end, the highest goal.[7]

Ṣaṭsthalas or Ekottaraśatasthala in Vīraśaivism are prescribed for the devotee who is anxious to aware of, to experience and to accomplish the Supreme within him and in the world outside. In realtiy due to the veil of ignorance (avidyā) and innate tendency in the Sādhaka the attachment towards the material objects takes place. But if once he realised the momentariness of the worldly objects and attractions, the higher instinct-the faith in the Supreme power begins to shine brightly.He apprehends freely the divine power within him and the universal spirit that controls and directs the whole universe. So the aspirant therefore, begins to offer admiration and deep devotion to him. This is the beginning in the practice. This practice is specially suitable for the mystic and yogic temperaments. It manifests highly gratifying unison of devotion, knowledge, detachment and action (Bhakti, Jñāna, Vairāgya and Kriya). The *Siddhānta Sikhāmaṇi* of Śivayogi Śivācārya has divided the 101 Sthalas into two groups, as Aṅgasthala and Liṅgasthala, each one of which is again sub-divided into a number of Sthalas, indicating the spiritual advancement of the Sādhaka. Thus among 101 Sthalas there are 44 belonging to Aṅgasthala and 57 to Liṅgasthala. Aṅgasthala indicates the actual performance and practice of the devotee and Liṅgasthala denotes the spiritual grace and power descending on the devotee. In the scheme of the 101 Sthala, we find and attempt to explain the simultaneous relation of the Aṅgasthala and the Liṅgasthala in each of the six Sthalaṣ from the Bhakta to the Aikya. In these Sthalas three points are important in the attainment of the goal—first mere understanding of the Supreme through the advice of the spiritual Preceptor, second the actual practice of Śivayoga and the third the achievement through the realisation. So we have to observe the features of Ekottaraśatasthala of Śivayogi Śivācārya based on the principles of the Aṅga and the Liṅga Sthala and their relation in each of the six main sthalas (Ṣaṭsthala). Again we have to clarify the secret development in the Ṣaṭasthala practice, as represented by the *Śivānubhavasūtra* of Moggeya Māyideva.

### (i) Bhaktasthala and its sub-sthalas

The word 'bhakta' is derived from the root 'bhaja' and has two meanings — 1. to resort to, 2. to divide. A bhakta in the Bhaktasthala is so called because he takes refuge in the Supreme being free from the shackles of worldly pleasures and take shelter in the Supreme.

The Bhaktasthala contains 24 sub-sthalas in which 15 belong to Aṅgasthala and 9 to Liṅgasthala, the former showing the gradual ascent of the sādhaka while the latter indicating the divine descent in proportionate

to the spiritual advance of the Sādhaka.[8] In the process of Ṣaṭasthala the first eight from Piṇḍasthala to Mantrasthala in the Aṅgasthala are the stages of preparation for the sādhaka. Gurukāruṇya Sthala, the 4th in it seems to be simultaneous with Dīkṣāgurusthala, the first in the Liṅgasthala. The preceptor with his Śivayoga power initiates the aspirant who is intend to get rid of the worldly bondage. Then he prepares his disciple to grasp his spiritual discourse. This is called Śikṣāgurusthala. Thereafter, he instructs him the right path through which the disciple achieves right knowledge. This is Jñānagurusthala.

Assimilating the eight processes of the Aṅgasthala the Sādhaka proceeds on the path of devotion (Bhaktimārgakriyāsthala) he directs his devotion towards the invisible Śiva, the Liṅga and Jaṅgama without any distinction (Ubhayasthala).

Thus the Guru, Linga and Jaṅgama form his spiritual property. Trividha Saṁpattisthala, which again with the addition of the supreme Grace of the Trinity, in the form of Pādodaka and Prasāda form the Caturvidhasārayasthala.

Such practice of the aspirant in accordance with the guidance of his Guru develops his intense devotion for the Iṣṭalinga that opens the treasure of the spiritual knowledge. This is Kriyāliṅgasthala.[9]

गुरोर्विज्ञानयोगेन क्रिया यत्र विलीयते ।
तत्क्रियालिङ्गमाख्यातं सर्वैरागमपारगैः ।।

लिङ्गमेव परं ज्योतिर्भवति ब्रह्म केवलम् ।
तस्मात् तत्पूजनादेव सर्वकर्मफलोदयः ।।

Through the meditation on the Iṣṭaliṅga which is the mirror reflecting one's own spiritual awakening, the Sādhaka experiences within him the existence of the Bhāvaliṅga[10] (Bhāvaliṅgasthala). In the next stage Jñānaliṅgasthala, after the complete absorption of Bhava the knowledge of the Supreme Being and the great bliss attained there-through take place[11]. In the last two stages (Bhāva and Jñānalingasthalas) the consciousness of the Supreme in the form of the divine Light develops.

The last three of the Aṅgasthala, viz., Upadhimātasthala, Nirupādhimātasthala and Sahajamātasthala are very important; the Sādhaka surrends himself to the intuitive personalities—first with desire of merit, next with consciousness of his duty and finally dedicates himself without any thought.

The last three stages in the Liṅgasthala viz., the Svayaliṅga, Caraliṅga and Paraliṅga are so called because, in the first, the Sādhaka tries to be free from egoism and unaffected by afflictions; he is ever contented with whatever he gets; he is self controled and is ever engrossed in the meditation of the Divine. He performs four actions, namely he meditates on Śiva, acquires the knowledge pertaining to Śiva, dedicates to the Supreme and the society, and lastly remains within himself.[12] These three stages will represent the awakening of the Divinity subjectively in the form of the divine consciousness (Liṅga) within in its three aspects viz., the individual, the intuitive and the universal; or objectively in the three forms of the intuitive personality, that is, Svayajaṅgama Carajaṅgama and Parajaṅgama.

So the *Śivānubhavasūtra* proclaims all the main characteristics of the Bhaktasthala in a single verse as under —

मिथ्यैव सत्यमिव भातमिदं शरीरं प्राणार्थजातमिति तत्र निवृत्तचित्तम् ।
भक्तिक्रियाचरणयैव सदा विरक्तं भक्तस्थलं भवविकारविदूरमाहुः ।।[13]

## (ii) Māheśvarasthala and its sub-sthalas

The faith of the Bhakta with spiritual bliss lifts him up (शिवतत्परः भक्तो माहेश्वरः स्मृतः)[14] to the higher stage of called Māheśvarasthala. For the easy practice it is advised that the Māheśvarasthala contains 18 sub-sthalas in which 9 belong to Aṅgasthala and 9 to Liṅgasthala. Here devotion and sense of duality, that is, the relation of worshipped and the worshipper remains in tact.

**Māheśvarasthala**

| *1. Aṅgasthala* | *2. Liṅgasthala* |
|---|---|
| 1. Māheśvaraprasaṁsasthala | 1. Kriyāgamasthala |
| 2. Liṅganiṣṭhāsthala | 2. Bhāvāgamasthala |
| 3. Pūrvāśrayanirasanasthala | 3. Jñānagamasthala |
| 4. Advaitanirasanasthala | 4. Sakāyasthala |
| 5. Āhvānanirasanasthala | 5. Akāyasthala |
| 6. Aṣṭamurtinirasanasthala | 6. Parakāyasthala |
| 7. Sarvagattvanirasanasthala | 7. Dharmācārasthala |
| 8. Śivajaganmayasthala | 8. Bhāvācārasthala |
| 9. Bhaktadehikasthala | 9. Jñānācārasthala |

By the full knowledge and perfect practice of Aṅgasthala here the devotee gets the divine grace descending in the form of spiritual knowledge. Māheśvara follows strict observances of moral and ethical values,[16] he believes in the Iṣṭalinga and wears it on the body as the emblem of Paraśiva; he gives up the distinction of caste and creed and believes in the equality of Śivasanskārins. But for the sake of worship he believes in the distinction of Jīva and Śiva as the worshipper and the worshipped.[17] Māheśvara does not subscribes to the idea of the eight forms of Śiva;[18] he has faith in the all pervading Paraśiva who has appeared in the form of Iṣṭliṅga;[19] he believes that the supreme is present in the hearts of His devotees.[20] All these observances of the devotee ensure the grace of the Supreme in the form of divine knowledge.

Though Śiva is within the hearts of all beings His knowledge is not acquired without the external worship (क्रियागम स्थल). The internal worship of Śiva, in the form of meditation and the divine experience—all are implied in the भावागमस्थल (शिवोऽहमिति भावोपि शिवतापत्तिकारणम्)[21]. In the Jñānāgamasthala the worship through intuitive knowledge is upheld without which unbalanced activities of mind are not controlled. Since the body is the only instrument for the service of the Supreme. His devotees through Kriyā, Jñāna and Bhāva conscionsly possess their body and nourish it as the body of the supreme. So it is called Sakāyasthala[22]. Being engrossed in the consciousness of the liṅga the devotee becomes unconscious of his body. Hence it is called Akāyasthala.

परस्य देहयोगेऽपि न देहाश्रयविक्रिया ।
शिवस्येव यतस्तस्मादकायोऽयं प्रकीर्तितः ।।

परलिङ्गे विलीनस्य परमानन्दचिन्मये ।
कुतो देहेन संबन्धो देहिवद्भासनं भ्रमः ।।

देहाभिमानहीनस्य शिवभावे स्थितात्मनः ।
जगदेतच्छरीरं स्याद्देहेनैकेन का व्यथा ।।

Then the devotee realises that his whole being is pervaded by the consciousness of Paraśiva (So this stage is known as the Parakāyasthala).[24] Righteousness and compassionate outlook towards all creatures and service to mankind constitutes the Dharmācārasthala. If the devotee offers to Him the fruit of all his actions (it is called the Bhāvācārasthala), and deeply absorbes in Śivajñāna, Paraśivatattva itself reveals within him.[25]

Thus, as *Śivanubhavasūtra* advises, with firm belief (Niṣṭhā bhakti) and worship of the Trinity (Guru, Liṅga, Jaṅgama), the Māheśvara follows vows, regulation and moral precepts. (Vrata-niyama-silas). He spells the mystical syllable with its hidden spiritual meaning identifying it with his Iṣṭadevatā (Guru-liṅga).[26] His purity imbibes within him the divine conscious with vigilance and wakefulness. So all the characteristics of Māhesvarasthala are explained by *Śivānubhavasūtra* thus :

आस्तिक्यबुद्धिनियमव्रतसत्यधर्म-
शौचादिलक्षणपरिस्फुटसच्चरित्रम् ।
लिङ्गैक्यनैष्ठिकतया सह वीरवृत्तं
माहेश्वरस्थलमिति प्रवदन्ति सन्तः ।।[27]

## (iii) Prasādisthala and its sub-sthalas

After achieving the purity of mind in the Māheśvarasthala, the aspirant enters into the next stage—Prasādisthala and determines to gain higher degree of purity. Prasādisthala contains 15 sub-sthalas of which 7 belongs to Aṅgasthala and 9 to Liṅgasthala.

**Prasādisthala**

| *Aṅgasthala* | *Liṅgasthala* |
|---|---|
| 1. Prasādisthala | 1. Kāyanugrahasthala |
| 2. Gurumahātmyasthala | 2. Indriyānugrahasthala |
| 3. Liṅgamahātmyasthala | 3. Prāṇānugrahasthala |
| 4. Jaṅgamamahātmyasthala | 4. Kayārpitasthala |
| 5. Bhaktamahātmyasthala | 5. Karaṇārpitasthala |
| 6. Saraṇamahātmyasthala | 6. Bhāvārpitasthala |
| 7. Praśadamahātmyasthala[28] | 7. Śiṣyasthala |
| | 8. Śiśrūṣāsthala |
| | 9. Sevyasthala[29] |

The devotee in the Prasādisthala offers everything including food, drink, clothing, etc. to the Surpeme Being in the form of Iṣṭa, Prāṇa and Bhāvaliṅgas and with humble devotion he receives them as divine Grace (Sívaprasāda). By this grace the Sādhaka achieves the purity of his inner being and he is callled Pradsādi :

लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः ।
मनःप्रसादयोगेन प्रसादीत्येष कथ्यते ।।[30]

The Prasādi also receives the grace of the divine Trinity—Guru, Liṅga and Jaṅgama who are responsible for the development of his divine personality (See Guru, Liṅga and Jaṅgama mahātmyas). When the devotee offers veneration to the holy intuitive Personalities i.e. Jaṅgamas, it is called Jaṅgama mahātmya.[31]

The same devotion and honour extended to the devotees (Bhakta) to the surrendered souls (Śaraṇas) and to those who are ever after the grace of the Supreme—as all of them are of equal importance to his spiritual development. So these form the three sthalas viz., the Bhakta, Śaraṇa and Prasāda mahātmya sthalas.

Through the constant practice of Liṅgānusandhāna and through the grace of the Trinity, the Prasādi achieves pure and electrified body. (Kayānugrahasthala).[32] As the external and internal organs are completely purified by the touch of the Supreme, the Sādhaka enjoys life without any troubles( Indriyānugraha).[33] When all the organs are controlled and purified, the vital breath is easily controlled and regulated and sound health is assured (so this stage is called Prāṇānugraha).[34] Thus all the adjuncts of the body, organs and Bhāva of the Prasādi are dedicated to the Supreme and are pervaded by Divine essence (these sthalas are—Kāyārpaṇa, Karaṇārpaṇa & Bhāvārpaṇa). Such a high-souled personality guides those who aspire for his help in spiritual advancement (Śiṣyasthala)[35] and such aspirants remain themselves to his service (Śusrūṣāsthala).[36] Again such followers also attain the state of an adept and acquire the state of being served by others (Sevyasthala).[37]

As Māyideva proclaims the devotion of the Sādhaka in the Prasādisthala is pure and subtle, carried on with undivided attention (Avadhānabhakti). Here all the vows and regulations are observed with greater interest and intensity and through it, the ability for the direct grace of the Supreme is gained. As long as the Prasādi's body needs food, drink and etc. it is his duty to dedicate them all to the Supreme in the form of Trinity, which is responsible to develop the inner consciousness and the highest knowledge.

Thus all the objects are to be accepted as the Prāsada of the Almighty. So Māyideva declares :—

आत्मोपभोगविषयाणि हि सावधानं द्रव्याण्यहङ्कृतिमितैरखिलैः खवर्गैः ।
लिङ्गे समर्प्य बहुशो लभते प्रसादं यत्तत् प्रसादि गदितं गुरुभिः स्थलं स्यात् ।।

## (iv) Prāṇaliṅgasthala and its sub-sthalas

The Prasādi with his steady attention obtains the divine grace that lifts him up to the higher stage. One who realises the effulgence of Supreme, Caitanyātmaka Liṅga is called the Prāṇaliṅga. It is also said that the Prāṇaliṅga is the union of Prāṇa which is Tattvātmaka, inhering the principles of the Caitanya and of Paraśiva, who is the pure knowledge and Light beyond all principles. One who abides in and enjoys such union is a Prāṇalingi.[39]

Through the yogic process the conjunction of Prāṇa and Apāna takes place and as a result the divine Light is produced within. This Light is called Prāṇalinga. In other words this Liṇga is nothing but Prarabrahman called the Praṇava and is of the nature of divine knowledge, Cidātmaka. Prāṇa is the seat of power. The union of power and light, knowledge or peace is known as Prāṇaliṅga and the Sādhaka having this experience is the Prāṇaliṅgi.

This sthala contains 14 sub-sthalas, 5 belonging to Aṅgasthala and 9 to Liṅgasthala.

**Prāṇaliṅgisthala**

| *Aṅgasthala* | *Liṅgasthala* |
|---|---|
| 1. Prāṇaliṅgisthala | 1. Ātmasthala |
| 2. Prāṇaliṅgārcanasthala | 2. Antarātmasthala |
| 3. Śivayogasamādhisthala | 3. Paramātmasthala |
| 4. Liṅganijasthala (or Nijaliṅgasthala) | 4. Nirdehāgamasthala |
| 5. Aṅgaliṅgasthala. | 5. Nirbhāvāgamasthala |
| | 6. Naṣṭāgamasthala |
| | 7. Ādiprasādisthala |
| | 8. Antyaprasādisthala |
| | 9. Sevyaprasādi.sthala |

In reality, the realisation of the inner illumination through the practice of Śivayoga is called Prāṇaliṅgisthala. In this sthala all the sense-organs are absorbed in the Liṅgadhyāna and by the meditation of this liṅga the light of consciousness shines within the Śivayogi.[40] Such meditation leads to Samādhi (Śivayoga Samādhisthala). The experience and realisation of the Supreme Liṅga within the Śivayogi (Liṅganija sthala) takes place and union of the soul and the Supreme Liṅga within the Śivayogi (Liṅganija

sthala) takes place and union of the soul and the Supreme also happens in the Aṅgaliṅga sthala.

The Śivayogi who has progressed in his Sādhanā by the method indicates above, completely overcomes the sense of body, organs, Prāṇa and Jīva-hood and completely merges in the knowledge of the Supreme. The distinction between Jīva and Paramātma vanishes (Ātmasthala) itself. The Śivādvitajñāna, the knowledge of identity, that the soul is not a part from the Supreme attained by the Śivayogi forms the Paramātmasthala.[41]

Further the Śivayogi engrossed in the Prāṇaliṇgānusandhāna works for the welfare of the world being aloof from the impressions of his physical vehicle (Nirdehāgama).[42] Next the Śivayogi's Bhāva becomes lofty and vast as the sky, deep and sublime as the depth of the ocean (Nirbhāvāgama). Then he visualises Paraśiva in all beings and in all objects of the creation (Naṣṭāgama sthala). He enjoys the presence of the Grace within him all the while. The last three stages in the Liṅgasthala here, indicate the state of the Śivayogi who directly experiences the Grace and vision of Paraśiva (Ādiprasādi and Antyaprasādi) and is revered as Supreme Śiva Himself (Sevyaprasādi).

In the view of Sanskrit work *Śivānubhavasūtra* the characteristics of Prāṇaliṅgisthala (based on Aṅgasthala) runs emphatically thus[43]

प्राणेन्द्रियादिषु ममाहमिति प्रमोहं सम्भ्रातिसिद्धमपहाय समस्तमेतत् ।
लिङ्गे निधाय मनसा यदनुप्रयुक्तं तत्प्राणलिङ्गि सुचरस्थलमाहुरार्याः ।।

### (v) Śaraṇasthala and its sub-sthalas

In the Śaraṇasthala complete surrender is the mark of the Śaraṇa who is engaged with devotion of delight (Ānanda-bhakti). The Supreme in turn intends to abide in Śaraṇa. This sthala contains 16 sub-sthalas, 4 Aṅgasthala and 12 Liṅgasthalas.

**Śaraṇasthala**

| *Aṅgasthala* | *Liṅgasthala* |
|---|---|
| 1. Śaraṅasthala | 1. Dīkṣāpādodakasthala |
| 2. Tāmasanirasanasthala | 2 Śikṣāpādodakasthala |
| 3. Nirdeśasthala | 3. Jñānapādodakasthala |
| 4. Śīlasampādanasthala | 4. Kriyāniṣpattisthala |
| | 5. Bhāvaniṣpattisthala |
| | 6. Jñānanispattisthala |
| | 7. Piṇḍākāśasthala |

8. Bindvākāśasthala
9. Mahākāśasthala
10. Kriyāprakāśasthala
11. Bhāvaprakāśasthala
12. Jñānaprakāśa.

Śaraṇa is endowed with a personality of complete control.and perfect purity, he forgets himself having an intense love for the Divine and experiences the perfect identity with Him (सती ज्ञेय: शिव: पति:।-सिद्धान्तशिखामणि)

With firm and pure devotion to the Supreme, with self knowledge and detachment the Śivayogi dispels the slightest darkness still lurking within him. (Tāmasa nirasanasthala). Then true knowledge shines (Nirdeśasthala) and Śaraṇa with his perfect and enlightened action and knowledge, tries to achieve Mahājñāna (Śīlasampādanasthala).

In the Dīkṣāpādodakasthala the words 'Pāda' and 'Udaka' representing Guru and Śiṣya stand for light and delight according to the *Śiddhāntaśikhāmaṇi* and they are inseparable. The awareness of equality and oneness forms the Śikṣāpādodakasthala.[45] Again the consciousness of bliss blended with the Divine knowledge of equality between the Guru and Śiṣya is Jñānapādodakasthala.[46]

The Śaraṇa is enjoying the eternal and perfect divine Bliss, he is working for the welfare of mankind; he looks like an ordinary human being but is superior to all (Kriyā-niṣpatisthala).[47] Such a Śivayogi withdraws his feelings from the external objects and activities and fixes them on the Supreme alon. (Bhāvaniṣpati). He is merged in the perfect and highest bliss of the Supreme knowledge (Jñānaniṣpati). Next sthalas realises the Śivayogi and confine the light of the Supreme within him. So, the *Śivānubhavasūtra* asserts the characteristic of the Śaraṇa :

ज्ञानप्रकाशबलतः स्वयमेव लिङ्गं देहेन्द्रियादि मम रूपमिति प्रबुध्य ।
युक्ते समस्तविषये सति यद्विशुद्धं तत्प्राहुरागमविदः शरणस्थलं हि ।।

Thus Śaraṇa realises the presence of the Divine through the power of the divine light of knowledge within him. His inner being is full of light alone. So he experiences the presence of the Supreme only characterised by the terms sat, cit, ānanda, nitya and paripūrṇa. Such a Śaraṇa is also called Jaṅgama in whom introverted state of mind- the fourth state of consciousness (tūrīya) is visible.

